तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

सेप्टम्बर् - २०२४ रू. २०/-




SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 06
September 2024, Price Rs.20/-
No. of pages-24

जगन्मातुः श्रीपद्मावतीदेव्याः पवित्रोत्सवाः, तिरुचानूर्

06.09.2024 आरभ्य 18.09.2024 पर्यन्तम्



# तिरुमल
# श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
## २०२४ अक्टोबर् ०४ तः १२ पर्यन्तम्

04-10-2024, भृगुवासरः
प्रातः - तिरुच्चि उत्सवः
रात्रौ - महाशेषवाहनम्

05-10-2024, मन्दवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

06-10-2024, भानुवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्टपम्

07-10-2024, इन्दुवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

08-10-2024, भौमवासरः
प्रातः - आन्दोलिकायां मोहिन्यवतारोत्सवः
रात्रौ - गरुडवाहनम्

09-10-2024, सौम्यवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - स्वर्णरङ्गडोलत्सवः

10-10-2024, बृहस्पतिवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

11-10-2024
भृगुवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

12-10-2024, मन्दवासरः
प्रातः - चक्रस्नानम्
रात्रौ - तिरुच्चि उत्सवः



# गीतामृतम्

श्रीभगवानुवाच -

भयाद्रणादुपरतं मन्यन्ते त्वां महारथाः।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्।।
अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्।।

(भगवद्गीता २.३५-३६)

श्रीभगवान् उवाच। हे अर्जुन!

भावः - हे अर्जुन! एतावत्पर्यन्तं ये महारथाः विनयादिभिः गौरवेण त्वां पश्यन्ति अद्य ते सर्वे भयात् युद्धात् पलायन्तं मन्यन्ते। तथा भूत्वा त्वं गौरवहीनः अल्पः इव लाघवं यास्यसि।

तव शत्रवः दुर्योधनादयः तव सामर्थ्यं निन्दन्तः बहु नीचान् असह्यान् दुर्वादान् कथयिष्यन्ति। तस्मादपि लोके शोककरं किमप्यस्ति वा? (बोधकैः साधकेभ्यः तदा तदा उत्तेजकर धर्मप्रबोधः कर्तव्यः। अतः कृष्णेन प्रबोधितोत्तेजकरवचांसि इमानि।

# सङ्कीर्तनम्

किं करिष्यामि किं करोमि बहुल
शंकासमाधानजाड्यं वहामि
।।किं करिष्यामि।।

नारायणं जगन्नाथं त्रिलोकैक
पारायणं भक्तपावनं
दूरीकरोम्यहं दुरितदूरेण सं
सारसागरमग्नचञ्चलत्वेन
।।किं करिष्यामि।।

तिरुवेङ्कटाचलाधीश्वरं करिराज
वरदं शरणागतवत्सलं
परमपुरुषं कृपाभरणं न भजामि
मरणभवदेहाभिमानं वहामि
।।किं करिष्यामि।।



(अन्नमाचार्यसङ्कीर्तनम्)

# पितृप्रीतिकर भाद्रपदमासस्य वैशिष्ट्यम्

भगवदपेक्षया जन्मप्रदातृ जननीजनकयोः अत्यधिकं प्राधान्यं दत्वा तयोः त्रिमूर्तिस्वरूपत्वेन अर्चत्समुन्नत संस्कृतेः अस्माकं हैन्दवधर्मः महदुन्नत स्थानं ददाति। मातृपितृ- द्वेषिनं परमेश्वरोऽपि नेच्छति। विनायकस्य गणाध्यक्षपदवीं विघ्नेशाधिपत्यञ्च दत्वा लोकपूज्यं कृतवन्तौ पार्वती परमेश्वरावेव पित्रोः प्रदक्षिणपुण्यफलादेव गणपतिः सर्वलोकेषु सर्वकार्यारम्भेषु प्रथमपूज्यस्सञ्जातः। अतएव पितृदेवताः अर्चयित्वा तयोः उत्तमगतिप्रदानार्थमेव मानवं धर्मदीक्षाबद्धं कर्तुमेव च शास्त्रेषु केचिन्नियमाः निर्दिष्टाः।

चान्द्रमासमनुसृत्य पौर्णम्यां चन्द्रस्य पूर्वाभाद्र अथवा उत्तराभाद्रनक्षत्रसञ्चारे कृते तन्मासमेव भाद्रपद मासः इति व्यवहरन्ति। अस्मिन् मासे एव श्रीमहाविष्णुः दशावतारेषु वराहवामनावतारौ जग्राह। सुवर्णगौरीव्रतम्, ऋषिपञ्चमीव्रतम्, अनन्तपद्मनाभव्रतम् इत्यादि व्रतानि अस्मिन् मासे संघटितानि। अतः तत्तद्व्रतपर्वादिनिर्वाहः सर्वेषां श्रेयस्करः।भाद्रपदबहुलपक्षः यथा पितृदेवतानां प्रीतिकरः तथैव शुक्लपक्षः (पाड्यमीतः पौर्णमी पर्यन्तं) अन्यव्रताचरणाय अतीव शुभकालः। पूजासु प्रथमपूजाग्रहीतुः विनायकस्य व्रतपर्वदिनमस्मिन् पक्षे एव पश्यामः।

प्रथमदेवः, प्रधानदेवः गणपतिः सर्वेषां कार्याणामदिभौतिकस्थानमाक्रमति। आध्यात्मिकसाधने अवरोध परिहारक सिद्धिबुद्धिसमृद्धिप्रददिव्यशक्तिरेव गणपतिरिति उपासनं वेदसंप्रदायः एव। विघ्ननाशः एव आरभ्यः। अत एव विघ्नसंहारकः इत्याराधयामः। गजवदनं ओङ्कारप्रतीकः।सर्वशब्दादिः ओङ्कारः। अत एव आदि दैवं गजवदनः। वेदाननुसृत्य मन्त्रगणानां जीवगणानामधिपतिः परमात्मैव गणपतिः। अर्चयित्वा तं तदाशीर्ग्रहणं अस्माकं सर्वेषां कर्तव्यम्।

अस्माकं आचारनियमेषु एकैकमासः ऐकैकदेवतायाः प्राधान्यं ददाति।पितृदेवताभ्यः मन्त्रपूर्वक श्राद्धकर्माणि समाचर्य तासामुत्तमलोकप्राप्तिविधिनिर्वहणमस्माकमवश्यकर्तव्यनियमः। भाद्रपदमासे बहुलपक्षपौर्णम्याःअनन्तर पाड्यमीतः अमावास्यापर्यन्तं पञ्चदशदिनकालः पितृपक्षं अथवा महालयपक्षमिति व्यवहरन्ति। अयं कालः पितृदेवतानां बहुप्रीतिकरः। एषु दिनेषु सर्वैः दिवङ्गतपितृ देवतास्मरणं श्राद्धविधिनिर्वहणमवश्यकर्तव्यम्। शुभकार्याणि कान्यपि नाचरणीयानि। अतः वयं सम्प्रदायसनातनधर्मं रक्षन्तः पुरोगतिं साधयन्तः लोकमार्गदर्शकाः भवेम।

सर्वे जनास्सुखिनो भवन्तु।

# सेप्टम्बर् -२०२४

सम्पुटिः-११ सञ्चिका-०६

स्वस्तिश्री चान्द्रमाण श्रीक्रोधिनामसंवत्सर श्रावणकृष्णचतुर्दशी आरभ्य
श्रीक्रोधिनामसंवत्सर भाद्रपदकृष्णत्रयोदशी पर्यन्तम् -१९४४



मुखचित्रम् - जगन्मातुः पद्मावतीदेव्याः पवित्रोत्सवाः तिरुचानूर्।
अन्तिमरक्षापुटः- श्रीगोविन्दराजस्वामिनां पवित्रोत्सवाः तिरुपति।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org


एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

गौरवसम्पादकः-
श्री जे.श्यामला राव, I.A.S.,
कार्यनिर्वहणाधिकारी
ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः -
डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,
छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः,
सहायक-छायाचित्रग्राहकः, ति.ति.दे.





**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
*– प्रधानसम्पादकः*

# गणेशचतुर्थी



- डा.जि.चन्द्रशेखर्
चरवाणी - ९४९१७९४५०६

**वक्रतुण्डं महाकायं कोटिसूर्यसमप्रभं।**
**निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।।**

भाद्रपदशुद्धचतुर्थी 'गणेशपुराणानुसारं' गणेशस्य अवतरणतिथिरिति कथयन्ति। लोकपीडाकरः गजासुरः गजमुखस्वामिना विना अन्यः कोऽपि हन्तुमशक्तः इति महागर्विष्ठी सन् देवान् भयकम्पितान् करोतिस्म। तदा सर्वे देवाः शङ्करसकाशं गत्वा तं हन्तुं प्रार्थयामासुः। तच्छृत्वा शिवः विष्णुरेव हन्तुं पार्वतीगर्भात् जनिष्यतीति वाग्दानञ्चकार। यथाकालं पार्वती गजमुखं, एकदन्तं चतुर्भजं बृहदुदरं विशालफालभागं पुत्रं सुषुवे। उपनयनानन्तरं गजाननः ब्रह्मणः अष्टसिद्धीः सुताः पर्यणैषीत्। पश्चात् मूषिकवाहनस्सः सैन्याध्यक्षेण षडाननेन सह गत्वा युद्धे गजासुरं जघान। तुष्टाः देवाः गजाननं पूजयामासुः। इदं युद्धं भाद्रपदशुद्ध चतुर्थ्यां निर्वाहितम्। अतस्तस्मात् कालादेव गजाननपूजाचारः भारते प्रवर्तते। महाभारतयुद्धप्रारम्भे धर्मराजोऽपि गजाननपूजाञ्चकार। महाराष्ट्रे गजाननाय षोडशोपचरापूजां कृत्वा पुरोहिताय दक्षिणां मोदक नैवेद्यं समर्पयन्ति। केचिदेकादशदिनपर्यन्तंमपि गजाननपूजां निर्वहन्ति। गजाननविग्रहाः मृदा सुवर्णेन, वा निर्मेयाः इति पुराणवचनम्। सर्वेषु कार्यारम्भेषु मङ्गळदैवतगजाननपूजा अवश्यं कर्तव्या।

गजाननः शतृहन्ता, विघ्नविनाशकः सन्तान सम्पूत्प्रदाता, सर्वकार्यानुकूलप्रदाता सर्वजनसम्मान्यः सन् देवैरपि सम्पूज्यते। गणेशपरचतुर्थ्यः, शङ्कर चतुर्थी गणेशचतुर्थी दूर्वागणेशचतुर्थी, कपर्दिविनायक चतुर्थी, सिद्धिविनायकचतुर्थीति चतस्रः वर्तन्ते। धर्मराजः सङ्कटचतुर्थ्यामेव गणेशं पूजयित्वा शत्रुञ्जयः सञ्जातः। दूर्वागणपतिपूजा श्रावणे वा कार्तिकमासे वा शुद्धचतुर्थ्यामेव उत्तमफलप्रदात्रीति इयं पूजा एकादशदिनपर्यन्तं कर्तव्यं इति महतां वचनम्।

पार्वतीपरमेश्वरौ अक्षक्रीडायां देवीप्रतिमां साक्षीकृत्य खेलन्तावास्ताम्। दूर्वाप्रतिमा शिवः एव विजेतेति एक पक्षतया वदति स्म। तदा रुष्टा पार्वती पङ्गुर्भवेति शिवं शशाप। शिवप्रार्थनया, नागकन्याभिः गजपूजानां निर्वाह्यमानायां ताभ्यः त्वं गणेशपूजोपदेशं प्राप्तश्चेत्पङ्गुत्वं विनश्यतीति शापावधि प्रोवाच। तथा कृत्वा शिवः, स्वस्थाङ्गः बभूव। अस्मिन् सन्दर्भे एव दूर्वागणपतिपूजा प्रारब्धा। भाद्रपदशुद्धचतुर्थ्यां सिद्धिविनायक व्रतम्। विनायकव्रतकथा श्रवणेन चन्द्रदर्शननिन्दादोषाः परिह्रियतेति वदन्ति। कपर्दिविनायकव्रत पूजा - श्रवणाशुद्धचतुर्थ्यारभ्य भाद्रपदशुक्लचतुर्थीपर्यन्तं




त्रिंशद्दिन पर्यन्तं दिने एकवारमेव भोजनं स्वीकृत्य कपर्दिगणेशपूजा कर्तव्येति शास्त्रवचनम्। कदाचित् पार्वती क्रीडायां शिवं पराजित्य तदायुधं त्रिशूलं चर्म च गृहीतवती। क्रुद्धः शिवः अदृश्यः जातः। तदा शिवानुग्रहार्थं वियोगार्ता अन्यस्त्रीभिराचर्यमानं कपर्दि गणेशव्रतं दृष्ट्वा तथैव व्रतमाचर्य शिवं प्रसन्नञ्चकार। विनायकस्य कण्ठोर्ध्वभागः गजमुखत्वात् नीलःअन्यः सर्वोऽपि शरीरभागःश्वेतः इति बहुप्रामाणिकवादः।

**गणपतिपत्रपूजा -** विनायकपूजायां एकविंशतिपत्राणां प्रमुख्यं वर्तते। पुरा आरोग्यसंरक्षणार्थं पूर्वीकैः ओषधीगुण भरितानि प्रकृतौ लभ्यमानाति पत्राणि निर्णीतानि। एतानि पत्राणि १.माचीपत्रम् २.बृहतीपत्रम्३. बिल्व पत्रम्४.दूर्वायुग्मम् ५.धत्तूरपत्रम्६. बदरीपत्रम् ७. अपामर्गपत्रम् ८. तुलसी पत्रम् ९. चूतपत्रम्१०.करवीर पत्रम्११. विष्णुकान्तपत्रम् १२. दाडिमीपत्रम् १३.देवदारुपत्रम् १४. सिन्धुवारपत्रम् १५. मरुवकपत्रम् १६. जातीपत्रम् १७. अगस्त्यपत्रम् १८. शमीपत्रम् १९. अश्वत्थपत्रम् २०. अर्जुनपत्रम् २१. अर्कपत्रम्....

कदाचित् शिवदर्शनार्थं गतः परशुरामः कृतावरोधः गणपतेः तुण्डं चिच्छेदेतिपद्मपुराण गाथा। दर्शनार्थं गतं शिवं कदाचित् एकान्तस्थायां पार्वत्यां गणपतिः अवरोधञ्चकारेति तस्य शिरः शिवः चिच्छेदेति पश्चात् क्रोधोपशमनानन्तरं पुनः गजशिरः आनीय सन्धानंकृत्वा गणपतिं सजीवञ्चकारेति पद्मपुराणगाथा। सुब्रह्मण्यगणपत्योः कस्य विवाहः आदौ करणीयः इति निर्णये, विवादे जाते पार्वती परमेश्वरौ पुत्रयोः यः यावत्प्रपञ्चं प्रदक्षिणं कृत्वा प्रथमतया आगछति तस्य विवाहः आदौ करिष्यावः इति स्पर्धां कल्पितवन्तौ। तदा मयूरवाहनः यावत्प्रपञ्चम् प्रदक्षिणं कृत्वा आलस्येन आगतवान्। गणपतिस्तु मातृपित्रोः प्रदक्षिणं प्रपञ्चभूप्रदक्षिण सममिति मातृपित्रोः प्रथमं एव प्रदक्षिणञ्चकार। गणपतिरेव स्पर्थायां विजेतेति निर्णीतः। गणपतेः एव आदौ विवाहः कारितः तस्य गणधिपत्यञ्च दत्तम्। सुब्रह्मणयस्वामिनः केवलं तारकासुरसंहारे सैन्याधिपत्यं दत्तम्।

**विनायकव्रत विधानम् -** भाद्रपदशुद्धचतुर्थ्यां पूजा स्थलनिर्मितमण्डपमध्ये नव्यवस्त्रं निक्षिप्य तस्मिन् गणेशमूर्तिं स्थापयित्वा पूजानन्तरं व्रतकथां पठित्वा यथाशक्ति नैवेद्यं समर्पणीयम्। भक्ष्यभोज्यलेह्यचोष्यपानीयैः नैवेद्यसमर्पणानन्तरं ताम्बूलहारतिसमर्पणानन्तरं च व्रतसमाप्तिः कर्तव्या। ततः ब्राह्मणाः सुवासिन्यः भोजनताम्बूलादिभिः सत्करणीयाः उद्यापनानन्तर गणेशमूर्तिं वाद्यघोषनृत्यगानैः प्रसिद्धवीथीषु वाहने नीत्वा नद्यां जलाशये निमज्ञनमनाद्याचारः। पर्वातीकृताचारः अद्यापि प्रवर्तते। गणेशपुराणे दूर्वायुग्मपूजा सङ्कटचतुर्थी, गाणेशस्य महाप्रीतिकारिणीति प्रोक्तम्। विनायकेन उदरे स्वीकृतानलासुराग्निज्वालाः महर्षिसमर्पितदूर्वाङ्कुरैः प्रशान्ताः इत्यैका गाथा लभ्यते। सिद्धिविनायकोत्पत्तिः चन्द्रस्य पार्वतीशापः, शमन्तकोपाख्यानकथापठनादिभिः विनायक व्रतविधानं महद्भिरूपदिष्टम्। ओङ्कारः गणपतिप्रतीकः। ३.संख्यास्थोपरिभागः गणपतिवदनं अधोभागः सर्वविश्वसहितलम्बोदरं उभयमध्यस्थभागः वक्रतुण्डं तदुपरि अर्धचन्द्राकारः तस्य बालचन्द्रनेत्रं सूचयन्ति। पार्वतीसृष्ट विनायकलोके विघ्नाधिपतित्वेन विघ्नेश्वरः राराजते इति पुराणोक्तिः। आदिपूज्यः प्रणवस्वरूपः शब्दब्रह्मस्वरूपः वाक्पतिः विद्याधिपतिरिति भक्ताः विनायकं श्रद्धाभक्तिभिः आराधयन्ति। शिवविष्णुदेवीगणेश कल्पेषु गणेशकल्पे परब्रह्मस्वरूपविनायकार्थं वरदगणेशपूजाव्रतपूजां पार्वती कृत्वा पुत्रं तं प्रसन्नं चकारेति गणेशपुराणे प्रोक्तम्। त्रिपुरासुरसंहारकाले पुत्रिकया पार्वत्या हिमवान् गणेशव्रतं निर्वाहयामासा। विष्णुः मधुकैटभराक्षसैः युद्धारम्भे ईश्वरोपदेशप्रकारं विघ्नेश्वरपूजां कृत्वा विजयमवाप। एवं सर्वेषु चतुर्दशभुवनेषु कार्यारम्भे सर्वेऽपि गणपति पूजां समाचर्य कार्यसिद्धिं प्राप्नुवन्ति। अतएव सिद्धिविनायक इति सर्वैः सङ्कीर्त्यते। विनायकस्य शरीराङ्गानि सर्वाणि ज्ञानलक्ष्मीचिह्नानि। सिद्धिबुद्धि भार्यासहितः गणपतिः अस्माकं सर्वान् विघ्नान् निवारयतु इत्यनिशं प्रार्थयामः।

**ओं अगजाननपद्मार्कं गजाननमहर्निशं।**
**अनेकदं तं भक्तानामेकदन्तमुपास्महे।।**
**विघ्नेश्वराय वरदाय सुप्रियाय**
**लम्बोदराय सकलाय जगद्धिताय**
**गौरीसुताय गणनाथ! नमो नमस्ते।।**



# वामनजयन्तिव्रताचरणफलम्

## वामनवतार वैशिष्ट्यम्

- डा एम्. ईश्वरम्मा
चरवाणी - ८१०६५ ७८२५०

वामनजयन्तेः श्रावणद्वादशी, विजयद्वादशीत्यपि नामान्तरव्यवहारः लोके दृश्यते। अयं बलिबन्धुपुण्यकालः। ''मत्स्यकूर्मवराहश्च नारसिंहश्च वामनः। रामो रामश्च कृष्णश्च बुद्धः कल्किरेव च'' इति प्रोक्तविष्णुदशावतारेषु वामनावतारः पञ्चमः विष्णोरतिप्रियः। भाद्रपदशुक्लद्वादशीं वामनद्वादशीत्यपि व्यवहरन्ति। ब्रह्मचारी वामनः तपस्विन्याः अदितेः कश्यपमहर्षिद्वारा जातः। विरोचनदैत्यस्य पुत्रः बलिः महाविष्णुभक्तः। विष्णोरभिमानपात्रञ्च आसीत्। अतस्सः गर्वात् देवताबाधकः बभूव। तदा देवास्सर्वे शेषनारायणसकाशं गत्वा बलिबाधां निवारयितुं प्रार्थयामासुः। भक्तभङ्गाय अनिष्टोऽपि विष्णुः विज्ञप्तिः अनुल्लङ्घनीयेति मेने। तदा विष्णुः ब्राह्मणयाचकवेषेण बलिचक्रवर्तिसकाशं गतः। आगतं वामनं दृष्ट्वा सिंहासनादुत्थितः बलिः वामन मेव स्वसिंहासने उपवेश्य अञ्जलिबद्धः अतिथिरूपेण आगमनकारणं पप्रच्छ। वामनः स्ववेदपठनार्थं त्रिपद्भूमिरावश्यकीति प्रोवाच। बलिः झटित्येव याचनामङ्गीकृत्य मन्त्रयुक्तदानाय गुरुं शुक्राचार्यमाह्वायामास।



आगतः शुक्रचार्यः त्रिपद्भूमि याचनोद्देश्यं ज्ञात्वा अपात्रदानमिति दानानन्तरमेव त्वां पादघातेनैव पाताललोकं वामनः प्रेष्यतीति दानं मास्त्विति विज्ञापयामास। बलिः वाग्दानभङ्गं न करिष्यामीति दानाय कलशजलं स्वहस्तात् वामनाय अञ्जलौ पातयितुं प्रारेभे। शुक्राचार्यः सूक्ष्मरूपं धृत्वा जलपतने अवरोधञ्चकार। बलिस्तदा अवरोधपरिहाराय दर्भमेकं कलशे प्रयुयोज तदा दर्भांशस्य घातात् शुक्रचार्यस्य एकं नयनं नष्टदृष्टिर्बभूव। गत्यन्तराभावात् सूक्ष्मरूपं विसृज्य शुक्राचार्यः कलशजलाद्बहिराजगाम। बलिदानकर्म सम्पूर्णं बभूव। तदा वामनः ब्रह्माण्डान्तसंवर्धी एकेन पादेन भूमिं अन्येन पादेन आकाशमाक्रम्य तृतीयपादं बलिशिरसि निक्षिप्य पातालं प्रेषयामास। बलेः विष्णुभक्तित्वात् बलिभवनस्यैव विष्णुः पाताले द्वारपालको

बभूव। इदं द्वारपालककर्म विष्णोः न न्यूनतापादकं भवति। बलिभक्तिफलिततया नित्यं वामनरूपदर्शनार्थमेव विष्णुः बलेः द्वारपालक बभूव। भविष्यपुराणे उट्टङ्कितोऽयं विषयः।

श्रीनिवासमूर्तिः भाद्रपदशुद्धद्वादश्यां श्रवणानक्षत्रे, जातः।

**व्रतमाहात्म्यकथा -**

पुरा मध्यदेशस्थशाकल्यपुरवासी वैश्यः वस्तुसामग्रीविक्रयार्थं अटवीमार्गे गच्छन् चोरैरपहृतसर्वस्वः मध्याह्ने अश्वत्थवृक्षच्छायायां स्थितः प्रेतनायकेन दृष्टः। प्रेतनायकः दयाळुः अस्य वृत्तान्तं श्रुत्वा स्वमहिम्ना आनीतं दध्यन्नं क्षुन्निवारार्थं तस्मै ददौ। अकस्मात् निर्जरारण्ये आगतदध्यन्नविषयमधिकृत्य एवमुवाच - पुराहं सोमशर्मनामकब्राह्मणः अकृतदानः भाद्रपदमास शुक्लपक्षे एकादश्यां तीर्थस्नानं कृत्वा दध्यन्नं पादरक्षे च कस्मैचित् ब्राह्मणाय दानमकरवम्। पश्चात् किञ्चित्कालानन्तरं मृतोऽहम् उत्तरक्रियाराहित्यात् प्रेतरूपं प्राप्तः। केवलमेकवारं जीविते ब्राह्मणाय दध्यन्नदानात् अस्मिन्नश्वत्थवृक्षे अन्यप्रेतैस्सह वसामि। प्रत्यहं मध्याह्नकाले अस्माकं सर्वेषां ''दध्यन्नपात्रं'' स्वयं अक्षयमागत्य भोजनानन्तरं गच्छति। मया भाद्रपदशुक्ल श्रवणानक्षत्र द्वादश्यां ब्राह्मणाय दानादिदं फलं लभ्यते। ततः प्रेतनाथेन प्रार्थितः सः तद्ब्राह्मणगोत्रनाम्ना पिण्डप्रदानात् प्रेतरूपाद्विमुक्तः गन्धर्वोभूत्वा पूर्वजन्मनि ब्राह्मणगृहे जातः। श्रावणद्वादश्यां व्रतमाचर्य सर्वसम्पदः प्राप्य राजाधिराजः पुरूरवचक्रवर्तिरूपेण जातः। श्रावणद्वादशी व्रताद्भुतफलमिदम्।

भाद्रपदमासशुक्लद्वादशीश्रवणानक्षत्रे वामनावतार - जयन्त्युत्सवं भारते भक्ताः महोत्साहतया महावैभवोपेततया निर्वहन्ति। इदमेव विजयद्वादशीदिनमिति व्यवहरन्ति। द्वादश्याः पूर्वं एकादश्यां उपवासेन रात्रौ निर्निद्रैः जागृतैः वामनावतार-विग्रहपूजा कर्तव्या। विग्रहस्य शिखा, सूत्रं, यज्ञोपवीतं, कमण्डलुः अवश्यम्भाव्याः।

त्रिविक्रममहिमोपेतं वामनावतारप्रधानांशतया वामनपुराणं व्यासेन दशसहस्रश्लोकात्मकं सप्ताधिकनवत्यध्यायात्मना विरचितम्। अत्र सरोमाहात्म्यं कुरुक्षेत्रस्थ ब्रह्मसरोवरविशेषाः



वर्णिताः। तत्र कुरुक्षेत्रं, तदन्तर्गत गुरुजाङ्गलपृथूकादितीर्थमहत्त्वं विस्तृतया अभिविर्णितम्। बलिचक्रवर्तियज्ञमपि कुरुक्षेत्रे एव निर्वाहितमिति वर्णितम्। वामनपुराणस्य मूलवक्ता पुलस्त्यब्रह्मा, श्रोता नारदमहामुनिः। पश्चात् नारदः व्यासाय, व्यासः लोमहर्षणाय नैमिशारण्ये सूतः शौनकादिमहामुनिभ्यः श्रावयामास।

इदं परमपवित्रं पुराणं परमात्मनः पुराणशरीरस्य त्वक्स्थानम्। महाविष्णुं प्रति अदितेः तपोबलात् प्रत्यक्षीभूतः विष्णुः वरं वृणीष्वेत्यवोचत्। सा विष्णुं स्वपुत्रत्वेन जातुमयाचता। अङ्गीकृतः विष्णुः कश्यपतपश्शक्त्या तव गर्भे प्रविष्यामीत्युक्त्वा वामनरूपेण अदितिगर्भात् जातः। तदा उत्पन्नाय वामनाय देवाः स्वस्वबहुमतीर्ददुः। सूर्यः सावित्री मन्त्रमुपिददेश। बृहस्पतिः यज्ञोपवीतमलङ्कृतवान् अदितिः वस्त्राणि छत्रञ्च ददौ सप्तर्षयः कुशदर्भाणि ददुः। ब्रह्मा जलकम्भं, कुबेरः कमण्डलं ददतुः।

तस्मिन् समये बलिः लोकत्रयं जित्वा भार्गवब्राह्मणान् पुरोहितान् कृत्वा अश्वमेधयागञ्चकार। अत्र त्रिविक्रमस्य वासुदेवस्य कथया सह नरनारायणोपाख्यानं, जगन्मातुः दुर्गादेव्याः चरितं, प्रह्लादोपाख्यानं , श्रीरामादारभ्य परमभक्तकथाश्च मनोहरतया वर्णिताः। दैत्यराजधुन्धुसम्बन्धिनी अन्या वामनावतारकथाप्यत्र वर्णिता। गजेन्द्रमोक्षकथायाः मूलमत्रैव वर्तते प्रधानतया विष्णुपारम्यमपीदं पुराणं शैवशाक्तादि सम्प्रदायश्रेष्ठत्वं वर्णयित्वा सर्वत्र ऐक्यतासिद्धान्तं प्रदर्शयति। अतः ''सर्वदेवनमस्कारः केशवं प्रतिगच्छतीति'' समतासूत्रमत्र दृश्यते।

**मनोहराः मुख्यांशाः -**

अत्र वामनावतार कथानन्तरं शिवलोकाः, जीमूतवाहनकथा, ब्रह्ममस्तकखण्डनं, कपालमोचनकथा, दक्षयज्ञध्वंसः, हरेः कालरूपम्, कामदहनम्, प्रह्लादनारायणयुद्धम्, भुवनकोशः कुरुक्षेत्रवर्णनम्, सत्यामाहात्म्यम्, पार्वतीजननं, स्कन्धचरितम्, अन्धकासुरवधम्, जाबालिकथा, मरुद्गणोत्पत्तिः, लक्ष्मीयचरितम्, प्रोतोपाख्यानम् नक्षत्रपुरुषाख्यानमित्यादि हृदयाकर्षकघट्टानि वर्तन्ते। अन्यपुराणेष्वलभ्यमानविषयाः अपि अत्र लभ्यन्ते। शिवेन भिन्नाभिन्नाङ्गेषु धार्यमाणसर्पाणां नामानि, देवदानवोपयुज्यमानवाहननामानि, कर्काटक, चवितिव्रतम्, कायज्ञबलिव्रतम्, गङ्गामानसिकस्नानम्, गङ्गामाहत्स्यम् दधिवामनस्तोत्रं, वाराहमाहात्म्यम्, वेङ्कटाचलमाहात्म्यम्, सुकेशिचिरतम्, त्रिविक्रमद्वारा धुन्धुवधम्, प्रह्लादतीर्थयात्रा, वामनस्य विविधरूपाणि, निवासस्थानवर्णनम्, प्रह्लादेन सुपुत्राय बलेः क्रियमाण भक्तिमहिमोपदेशकथाः विष्णुपूजाविधानम्, विष्णुबाल्यवर्णनम्, विष्णुदीक्षाग्रहपद्धतिः इत्यादि विषयैः ग्रन्थः परिसमाप्यते। पुराणश्रवणफलतया पापनाशनं विष्णुद्वारा परमपदप्राप्तिः निर्दिष्टा। ''नमो नमः कारणवामनाय'' इत्येकादशाक्षर वामनमन्त्रः सर्वैरवधार्यः।

अत्र वर्णिता सुदर्शनचक्रकथा रमणीया दृश्यते।

**सुदर्शनचक्रकथा : -**

पुरा आत्रेयी वीतमन्योः दारिद्र्यावस्थायां, प्रत्यहं क्षीरस्थाने तण्डुलपिण्डिं पुत्राय उपमन्योः क्षीरान्नमिति ददातिस्म। सः बालः कदाचिदन्यगृहे क्षीरान्नं भुक्त्वा प्रत्यहं मातृदत्तं क्षीरान्नं न भवतीति ज्ञात्वा मातरं पप्रच्छ। माता दारिद्र्यात् क्षीराभावात् तण्डुलपिण्डिं ददामीति सत्यमुक्त्वा महादेवस्य विरूपाक्षस्य आराधनया क्षीरान्नस्थाने सहस्राधिकरुचिकरं अमृतमेव लब्धुं शक्यते इत्यवोचत्। तदा माता आत्रेयी विरूपाक्षस्य शिवस्य माहात्म्यमेवमुक्तवती। पुरा ''श्रीदामोनाम'' राक्षसराजः प्रपञ्चमेव जित्वा लक्ष्मीमपि वशीचकार। तदा विष्णुः शिवसकाशं गत्वा सहस्रवर्षपर्यन्तं तपः कृत्वा स्वनयनमपि शिवाय समर्पमायास।

सन्तुष्टः शिव सुदर्शनचक्रं दत्वा तत्प्रभावमेवमुवाच - इदं चक्रं उत्तमोत्तमायुधम्। द्वादशारैः षन्नाभिभिः युगद्वययुक्तं असाधारण वेगोपेतम्। समस्तान्यायुधनाशकारि। सज्जनरक्षार्थं द्वादशारेषु अस्मिन् सर्वदेवताः राशिऋत्वग्नि सोममित्रिवरुणेन्द्र विश्वदेवताप्रजापति हनुमद्धन्वन्तरितपादयः चैत्रादिमासाः प्रतिष्ठितास्सन्ति। अजेय शक्तियुतमेतत् स्वीकृत्य शत्रुसंहारं कुर्विति उवाच। तदा विष्णुः इदं चक्रममोघशक्तियुतमिति ज्ञातुं त्वय्येव प्रयोक्तुं अनुमतिं देहीती शिवं पृष्ट्वा अङ्गीकृते शिवे तच्चक्रं प्रयुज्य शिवमपि विश्वेश यज्ञेश, यज्ञयाजकरूपखण्डत्रयं चकार। तदा शिवः अहमभेद्यः मृत्युञ्जयः अदाह्यः। मत्तत्वं स्वभावं नज्ञातोऽसीति मच्छरीरांशाः इतः परं हिरण्याक्ष, सुवर्णाक्ष, विरूपाक्षाः इति व्यवह्रियन्ते इत्यवोचत्। एतच्चक्रं आराधकानां सर्वशक्तीः दास्यतीत्युक्त्वा अन्तर्दधे। ततः उपमन्युः शिवस्तुतिं कृत्वा भक्ताग्रेसरः सर्वसम्पदः प्राप्य अन्ते मुक्तिमवाप। शिवदत्तं चक्रं महावेगामोघशक्तिमतसत् शिवशक्तिप्रतीकत्वेन विराजते। विष्णुः तच्चक्रं स्वीकृत्य सुदामराक्षसं हत्वा देवतानामार्तिं दूरीचकार। एतादृशमहिमान्वित सुदर्शनचक्रादिकथाः अस्मिन् वामनपुराणे वेदव्यासेन सम्यक् सन्निवेशिताः।

**''वामनावताराय विष्णवे नमो नमः''**



# ब्रह्माण्डनायकस्य ब्रह्मोत्सवः



श्रीवेङ्कटाचलाधीशं श्रियाध्यासित वक्षसं।
श्रितचेतन मन्दारं श्रीनिवास महंभजे।।

नित्यकल्याणचक्रवर्तिनः बहूनां दाक्षिणात्यानां कुलदैवस्य श्रीवेङ्कटेश्वरस्वामिनः यावद्वर्षं प्रत्यहं सेवाः उत्सवाः महावैभवोपेततया निर्वाह्यन्ते। आदौ ब्रह्मणा स्वहस्तनिर्वाहितस्य ब्रह्मोत्सवस्य अत्यन्तं वैशिष्ट्यं दृश्यते। नारायणपर्वते पुष्करिणीतीरे कन्याभाद्रपदमासे एकादशीतिथौ सोमवासरे श्रवणानक्षत्रे सिद्धयोगे श्रीनिवासः वेङ्कटाद्रौ अवततारेति पुराणवचनम्। लोकरक्षणार्थं वैकुण्ठं विसृत्य वेङ्कटाद्रौ स्थितं भगवन्तं अन्विषन् सृष्टिकर्ता ब्रह्मा अन्यदेवताभिस्साकं वेङ्कटाद्रिं प्राप्य श्रीनिवासं वेङ्कटेशं परमानन्दभरितः ददर्श। ततः -

ध्वजारोहणपूर्वकं भवतः कार्यः महोत्सवः। स च त्वया महाभूमान् अङ्गीकार्यःश्रिया सह अनुगृह्णन्तु इति ब्रह्मा श्रियःपतिं प्रार्थयामास। अङ्गीकृते श्रीनिवासे ब्रह्मणा अयमुत्सवः निर्वाह्यते इति ततः प्रभृति ब्रह्मोत्सवाः। (वराहपुराणम्) वर्षे वर्षे निर्वाह्यन्ते। एवमादौ श्रीनिवासस्य ब्रह्मोत्सवाः सृष्टिकर्त्रा निर्वाहिते सर्वे देवाः उत्सव दर्शनार्थमागताः। एवं पुराणकालादारभ्य निर्वाह्यमानेषु उत्सवेषु चारित्रककालेऽपि बहवः पालकाः स्वराज्याभिवृद्ध्ययं युद्धविजयार्थं कृतज्ञतया उत्सवान् निर्वहन्ति स्म। लब्धेषु तिरुमलतिरुपति शासनेषु एते उत्सवविशेषाः उट्टङ्किताः।

आङ्गलशके सप्तमशताब्द्याः पूर्वं तिरुमलपुण्यक्षेत्रे ध्वजारोहणकार्यक्रमाः प्रचलन्ति स्म। अन्योत्सवाः सर्वे तिरुचानूरु देवालये निर्वाह्यन्ते स्म।

६१४ संवत्सरे चतुर्दशाधिकसंवत्सरषष्ट-शताब्द्यां पल्लवराज्ञी सामवायि मनवाल पेरुमाळ्नाम्ना रजतोत्सवमूर्तिं बहूकृतवती। तस्याः राज्ञ्याः पेरुन्दैवी इत्यपि नाम आसीत्।इयमुत्सवमूर्तिः भोगश्रीनिवासमूर्तिः। पेरटासिमासे- निर्वाह्यमानब्रह्मोत्सवेभ्यः पूर्वं इमां उत्सवमूर्तिं तिरुवीथीषु वाहनमधिरोप्य



भ्रामणादिकं कर्तुं व्यवस्था तयाकृतेति प्रसिद्धकथनं वर्तते। एतद्विग्रहबहू - करणानन्तरमेव तिरुमलक्षेत्रे सम्पूर्णोत्सवाः प्रारब्धाः इति महतां वचनम्।

दक्षिणान्ध्रदेशस्य कञ्चीपालकस्य नेल्लूरुचोलान्ध्रराजा त्रिभुवनचक्रवर्तीति प्रसिद्धिं प्राप्तः विजयगोण्ड गोपालः (१२४८-१२६३) १२५४ संवत्सरचैत्रमासे उत्सवान् निर्वाहयामास। तिरुवेङ्कटनाथयादवरायः (१३२१-१३३७) स्वपरिपालन काले १३२८ संवत्सरे आषाढमासे आडितिरुवाल्लु इति नाम्ना उत्सवान् निर्वाहयामास। इल्लत्तूरुनाडुस्थ पोंगल्लुरु- ग्रामादाये अर्धं श्रीस्वामिने सर्वमान्यत्वेन दानं ददौ। इदं दानं आणिमासे ब्रह्मोत्सवव्ययार्थं दत्तम्। विजयनगरसाम्राज्यपालकः सङ्गमवंशीयः द्वितीय हरि हर रायः (१३७९-१३९९) १३८८ संवत्सरे जनवरि १३ दिने पुन्दोड्डु इति ग्रामं समर्प्य तदादायात् वर्षे वर्षे मार्गशिर मासे ब्रह्मोत्सवनिर्वहणाय व्यवस्थाञ्चकार। विजयनगर साम्राज्य सङ्गमवंशपालकः द्वितीयदेवरायः (१४१९-१४४४) स्वपरिपालनकाले १४ वत्सर डिसेम्बरमासे पञ्चमदिने तिरुमलक्षेत्रं गत्वा स्वामिदर्शनानन्तरं भक्त्यतिशयेन अश्वयुजमासे तयैव दीक्षया पुनर्वसुनक्षत्रादारभ्य स्वातिनक्षत्र पर्यन्तं भक्तजनदर्शनार्थं तदभिमतसिध्यर्थं नवदिन - पर्यन्तं ब्रह्मोत्सवनिर्वहणार्थं व्यवस्थाञ्चकार।

एवं भक्ताग्रेसरः साळुववंशपालकः सालुवनरसिंहरायः संवत्सरे सप्तमासपर्यन्तं ब्रह्मोत्सवनिर्वाहव्यवस्थाञ्चकारेति चारित्रकाधारः संदृश्यन्ते। श्रीकृष्णदेवरायः (१५०९-१५२९) सप्तवारं तिरुमलक्षेत्रं ददर्श। १५१३ मे मासे द्वितीयतिथौ द्वितीय वारं, तस्मिन्नेव संवत्सरे जून् मासे १३ तिथौ तृतीयवारं तिस्मतक्षेत्रं ददश। अस्मिन् समये बहुबहुमतीभिः साकं बहुग्रामान् समर्प्य पित्रोः आत्मोद्धरणाय वर्षे वर्षे त्रैमासे उत्सव व्यवस्थाञ्चकारेति चारित्रकाधारास्सन्ति। तदनन्तरं अच्युत देवरायः १५२९ वर्षे तिरुमलालये विजयनगरराज्यचक्रवर्तित्वेन पट्टाभिषेकं प्राप्तवान्। पश्चात् १५३० संवत्सरे अच्यतराय ब्रह्मोत्सव नाम्ना ब्रह्मोत्सवमपि कारयामास। एव १५८३ संवत्सर पर्यन्तं मासे मासे ब्रह्मोत्सवाः निर्वाह्यन्ते स्म। कालगर्भे राज्यराजव्यवस्थानाशात् उत्सवाः स्तग्धाः आसन्। ब्रह्मणा प्रारब्धः केवलं ब्रह्मोत्सवः एक एव निर्वाह्यते स्म।

प्रायशः यस्मिन् कस्मिन्नपि मासे एकस्यां तिथौ उत्सवप्रारम्भनिर्वाहः प्रचलेत्। परन्तु तिरुमल क्षेत्रे अन्य दिनं आधारीकृत्य ब्रह्मोत्सवनिर्वाहणं विशेषः।

कन्यामासे सूर्यस्य कन्यामासप्रवेशे मासे श्रवणानक्षत्रदिने अवभृधं निर्णीय तस्मात् नवदिनपूर्वात् उत्सवाः निर्वाह्याः। अवभृधं नाम चक्रस्नानम्। एतत् प्रायशः कन्यामासः आश्वयुज मासे आगच्छति। अतः ब्रह्मोत्सवाः दशरात्रि पर्वदिनेषु प्रचलन्ति। परन्तु चान्द्रमानमनुसृत्य वर्षत्रये अधिकमासः आगच्छति। अस्मिन् समये कन्यामासः भाद्रपद मासे आगच्छति। अतः भाद्रपदमासे ब्रह्मोत्सवाः प्रचलन्ति। पुनः आश्वयुजमासे दशरात्रिदिनेषु ब्रह्मोत्सवाः निर्वाह्यन्ते। अर्थात् अधिकमासागमनसमये वारद्वयं ब्रह्मोत्सवः प्रचलति। प्रथमतः सालकट्ल ब्रह्मोत्सवाः इति दशरात्रि पर्वदिनेषु निर्वाह्यमानाः नवरात्रि ब्रह्मोत्सवाः इति व्यवहरन्ति। एवं द्विविध ब्रह्मोत्सवसमये सालकट्ल ब्रह्मोत्सवाः यथाविधि निर्वाह्यन्ते। नवरात्रि ब्रह्मोत्सवेषु ध्वजारोहणावरोहणे न स्तः। एवं सालकट्ल ब्रह्मोत्सवेषु अष्टमदिने रथोत्सवे स्वामिनः चन्दनरथमधिरुह्य वीथीषु परिभ्रमन्ति। दशरात्र्युत्सवेषु स्वर्णरथमधिरुह्य आलय वीथीषु परिभ्रमन्ति। एवं सालकट्ल ब्रह्मोत्सवेषु रात्रौ वाहनसेवानन्तरं आलये तिरुमलरायमण्टपे प्रत्यहं स्वर्णतिरुच्चै स्वामिन मधिरोहयित्वा आस्थानं निर्वहन्ति। नवरात्रिब्रह्मोत्सवेषु रङ्गनायकमण्टपे स्वर्ण शेषवाहनं अधिरोहयित्वा आस्थानं निर्वहन्ति।



ब्रह्मोत्सवप्रारम्भात् पूर्वं मङ्गलवारे कोयिळ्-आळवार् तिरुमञ्जनं अर्थात् आलय शुद्धिं कुर्वन्ति। ब्रह्मोत्सवेभ्यः पूर्वदिने सायं समये अङ्कुरार्पणकार्यक्रमः प्रचलति। स्वामिनः सेनाध्यक्षस्य विष्वक्सेनोत्सवानन्तरं वसन्तमण्टपं गत्वा वल्मीकमृदानीय आलय यागशालायां नव्यपालिकासु नवधान्यानि निक्षिप्य अङ्कुरार्पणं कुर्वन्ति।

ब्रह्मोत्सवाः ध्वजारोहणेन प्रारभ्यन्ते। प्रथमदिने सायंसमये आलये ध्वजस्तम्भस्थ गरुडकेतनस्य उद्यालनमेव ध्वजारोहणम्। तद्रात्रिसमयादारभ्य वाहनसेवाः प्रचलन्ति। ब्रह्मोत्सवेषु वेङ्कटेश्वरस्वामिनः उत्सवमूर्तिः मलयप्पस्वामी वाहनान्नधिरुह्य तिरुमलमाडवीथीषु परिभ्रमन् भक्तानानुगृहन्ति। विविधरूपेषु



अलङ्कृतस्वामिनः केषुचिद्वाहनेषु एक एव, केषु चिद्वाहनेषु भूश्रीदेवी सहितः वाहनमधिरुह्य वीथीषु सञ्चरन्ति। लघुशेषवाहनं (वासुकि), हंसवाहनम् सिंहवाहनम् मोहिन्यवतारे शिविकथा गरुड हनुमद्गज सूर्यचन्द्रप्रभाश्ववाहनेषु स्वामी एक एव वाहने सञ्चाल्यते। आदिशेषमौक्तिकडोलिकासर्वभूपालवाहनेषु स्वर्णरथोत्सवे बृहत्रथोत्सवे भूश्रीदेव्या सह स्वामी परिभ्रमसञ्चारं करोति। बालकृष्णः, कालीयमर्दन कृष्णः योगमुद्रा श्रीराम राजराजरूपालङ्कारै वाहनसेवासु स्वामी, सरस्वतीदेवीरूपे हंसवाहने, मोहिनीरूपे आन्दोलिकायां गच्छन् भक्तानां नेत्रपर्वं करोति।

ब्रह्मोत्सवेषु नवमदिने श्रीभूदेवीसहित मलयप्पस्वामी तिरुच्चिवाहने गच्छन् वराहस्वामिनः आलयं प्राप्नोति। स्वामिनः आयुधं चक्रत्ताळ्वार् स्वामिनं अनुसरति। वराहस्वाम्यालये स्नपनतिरुमञ्जनं निर्वहन्ति। पश्चात् चक्रत्तल्वारं पुष्करिणीं प्रापय्य पुष्करिण्यां मज्जनं कारयित्वा पवित्रस्नानं कारयन्ति। इदमेव चक्रस्नानमवभृध स्नानम्। अस्मिन् दिने सायं समये ब्रह्मोत्सवप्रारम्भध्वजस्तम्भे उच्चालितगरुड-केतनमवरोहयन्ति। इदमेव ध्वजारोहणम्। ध्वजारोहणं नाम सकलदेवतानां पुनः स्वस्थानप्रेषणसङ्केतः। एवं महावैभवोपेततया निर्वाह्यमानब्रह्मोत्सवेन लोकत्रयं आनन्दपुलकाङ्कितं भवति।

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन।
वेङ्कटेशसमोदेवो न भूतो न भविष्यति।।

तेलुगुमूलम् -
डा.ऐ.एल्.एस्.चन्द्रशेखर्
संस्कृतानुवादः -
आचार्य जि.पद्मनाभम्
चरवाणी - ९२४७३२८२८६



श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

## दुरितहारी श्रीनिवासः

श्लो.१६.

जननमृतिलताप्रतानवीतं
क्षितिरूहशालि च काममुख्यदोषैः।
वृषगिरिशिखराश्रयः कृशानुः
दुरितवनं मम भस्मसात् करोतु॥

ता - पापनामकं महारण्यम्। तत् जनन मरणाख्यलतारूप सुवक्रवल्लीभिः आवेष्टितम् कामादिदोषरूपवृक्षसान्द्रम् अस्ति। तादृशं मम पापविपिनं सर्वं शेषशैलशिखरे भासमानो वह्निरूपो वेङ्कटाधिपो भस्मी करोतु। नाशयतु इति भावः।

सु.सौ.व्याख्या - पूर्वश्लोके अज्ञानस्य अपहारकः श्रीवेङ्कटेशः इति प्रस्तुत्य अत्र स देवदेवः अज्ञानावरणहेतुं पापम् अपाकरोतु इति प्रार्थ्यते।

जनन... वीतम् - संसाराख्यायां भूम्यां पापाख्यं निबिडम् अरण्यम् अस्ति। तच्च जीवस्य निरन्तर जननमरणरूप लतारज्जुभिः सर्वत्र संवेष्टितं वर्तते। जातस्य प्राणिनः मरणस्य ध्रुवत्वात् ततः पूर्वं कृतं पुण्यपापरूपं कर्म अनन्तरजन्मसु अवश्यानुभाव्यं सत् तं बध्नाति। ततश्च पुनरपि " न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" - भ.गी.३.५. इत्युक्तरीत्या जीवः नित्यं कर्माचरणशील एव भवति। एवंकृतं कर्मैव फलरूपेण अवश्यानुभाव्यतया तत्कर्तारं संसारमण्डले बध्नाति। तेन तत् सर्वं कर्म पापम् इत्युच्यते। तत्फलानुभवार्थं नानाजन्मप्राप्तिः ततो मरणं च सम्भवति। अतः जननमरणरूपरज्जुभिः परिवेष्टितं सत् पापं कर्म प्रवर्धते एव। क्षितिरुह... मुख्यदोषैः कामक्रोधलोभमोह



मदमात्सर्यरूपाः षट् जीवस्य सहजशत्रवः। ते जननात् आरभ्य जनं नित्यं बाधन्ते एव। अत एव ते वर्जनीयाः दोषाः। पापारण्ये एते कामादयः महावृक्षरूपेण निबिडतया प्रवर्धमानाः वर्तन्ते।

वृषगिरि... कृशानुः - भगवान् एव अत्र कृशानुः नाम अग्निः। ''कृशानुः पावकोऽनलः'' १.१.५४ इत्यमरः। दावाग्निः यथा अरण्यं समूलाग्रं दहति, तथैव भगवान् स्वाश्रितानां भक्तानां सञ्चितागामिरूपं सकलं पापसमूहं नाशयतु इत्यर्थः। भगवतः पापहारकत्वं - ''तद्यथा इषीकातूल मग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते छान्दो ५.२४.३ इत्यादिभिः बहुभिः श्रुतिभिः स्पष्टतया प्रतिपादितम्। तदेव - ''तदधिगम उत्तरपूर्वाघयो- रश्लेशविनाशौ तद्व्यपदेशात्'' ब्र.सू.४.१.७. इत्यादि सूत्रगणेन ब्रह्मोपासनमाहात्म्यकथनसन्दर्भे सूत्रकारेण च सुदृढम् उक्तम्।

महर्षिभिश्च बहुशः प्रस्तुत एष विषयः

''हरि र्हरति पापानि'' इत्यादिना।

एवम्

यथाऽग्नि रूद्धतशिखः कक्षं दहति सानिलः।

तथा चित्तस्थितो विष्णुयोगिनां सर्व किल्बिषम्।।

वायुसहायो वह्निः ऊर्ध्वज्वालः सन् वनगुल्मादीन् यथा भस्मीकरोति तथैव योगिभिः मनस्सु ध्यातः जनार्दनः तेषां समस्तपापराशिं नाशयति - इति।

तथैव -

सकृत् स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम्।

पापराशिं दहत्याशु तूलराशिमिवानलः।।

-एकवारं भक्तैः स्मृतोऽपि विष्णुः तेषां परश्शतेषु पूर्वजन्मसु कृतं पापसमूहम् अग्निः कार्पाससमुदायम् इव सद्य एव नाशयति इति।

एवमेव अत्र इयं गोदादेवी श्रीसूक्तिरपि सादरम् अनुसन्धेया -

''दामोदरनै, तूयोमाय् वन्दु नाम् तूमलर तूवितोळुदु वायिनाळ् पाडि मनत्तिनाळ् शिन्दिक्क, पोय् पिळैयुम् पुगुदरूवानिन्ननवुम् तीथिनिल् तूशागुम्' - तिरूप्पावै.५.

- पवित्र भावेन दामोदरम् उद्दिश्य पुष्पाणि समर्प्य संसेव्य, प्रीत्या सङ्कीर्त्य, ध्यानं क्रियते चेत् अस्माकं सञ्चित आगामि रूपं सकलम् अपि पापम् अग्नौ क्षिप्तं तूलम् इवि दह्यते। एवमेव अस्मत्पापराशिं कृत्स्नतया भगवान् श्रीनिवासः निर्णुदतु इति प्रार्थ्यते।

भस्मसात् करोतु - साकल्येन भस्मीभूतं करोतु इत्यर्थः। भस्मशब्दात् अभूततद्भावे साकल्यार्थे ''विभाषा साति कात्स्न्र्ये'' अष्टा-५.४.५२ इति सूत्रेण सा तिप्रत्ययः।।

अस्मिन् श्लोके पुष्पिताग्राख्यं विषमवृत्तम्।

तल्लक्षणम् इदम्-

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा- इति।।

(अनुवर्तिष्यते)



**शिष्येभ्यः गुरुपदेशः - सत्यं वद धर्मं चर। स्वाध्यात् मा प्रमदः। आचार्यय प्रियं धनं आहृत्य प्रजातन्तुं मा व्यवछेत्सीः सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम् कुशलान्न प्रमदितव्यम्। भूत्यैन प्रमदितव्यम्। स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवोभव पितृदेवो भव। आचार्य देवो भव। अतिथि देवो भव।**




# अनन्तपद्मनाभव्रतम्

- डा.के.कोटेश्वरय्य
चरवाणी - ९९८५१२३२६२

अनन्तस्य पूजायाः भाद्रपदशुक्लचतुर्दशी उद्दिष्टं दिनम्। अत एव अनन्त पद्मानाभचतुर्दशीव्रतदिनमिति प्रसिद्धिः। त्रिमूर्तिषु विष्णोः नाम अनन्तः इति। उत्कलदेशे अघोर चतुर्दशीत्यपि कथयन्ति। पूर्णिमायुक्तचतुर्दशी अस्य व्रतस्य मुख्यमिति भविष्योत्तरपुराणे कथितम्। भारतीयैः आचर्यमाण काम्यव्रतमेतत्। अनन्तव्रतस्य मुख्याङ्गानि - यमुनाजलपूजा, अनन्तपूजा, प्रतिसरपूजा इति त्रिविधपूजा प्रसिद्धा। यमुनानदीतीरे मुत्रेति ग्रामे कस्यचिद्ब्राह्मणस्य बहुलेति साधुधेनुरासीत्। सा धेनुः कदाचित् भाद्रपदशुक्लचतुर्दश्यां यमुनानदीतीरे ग्रासं खादतिस्म। हठात् व्याघ्रः आगत्य तां धेनुं आहारार्थं हन्तुं प्रायतत। तदा सा धेनुः ''मम एकः वत्सः वर्तते। तत्र गत्वा कथञ्चिद्वत्सं आश्वासयित्वा परोपकारार्थं व्याघ्राहारार्थं स्वदेहं समर्पयितुं गच्छामीति उक्त्वा पुनरागमिष्यामि अनुमतिर्देया'' इति व्याघ्रं प्रार्थितवती। एतदर्थं अङ्गीकृते व्याघ्रे धेनुः वत्ससकाशं गत्वा तस्य क्षीरं पाययित्वा पुनः व्याघ्रसकाशमजगाम।

तदा हठात्प्रमादात् व्याघ्रः मृतः। मृतात्मा पूर्वजन्मपुण्यफलात् ज्ञानवानासीत्। अतः सः मृतात्मा धेनुमुद्दिश्य त्वं तव वत्ससकाशं गच्छ, इदं दिनं भाद्रपदशुक्लचतुर्दशी। अस्मिन् दिने गोदानात् गोसम्पदभिवृद्धिः स्यात्, व्याघ्रादिक्रूरमृगबाधापि न स्यात्। एतद्विषये यमुनानदी, एव साक्षी स्यात् इत्युवाच। भाद्रपदशुक्लचतुर्दश्यां यमुनानदीसाक्ष्यात् वर्षे वर्षे नदीजलस्य पूजा निर्वाह्यते। पूजासम्बन्धमन्त्रेषु विष्णुरूपिणी, सर्वकामप्रदायिनी सर्वपापप्रणाशिनीत्यादि विशेषनामानि यमुनानद्याः प्रसिद्धानि बभूवुः। आदौ यमुनानदीतीरे कृतं व्रताचरणं हिन्दूदेशे सर्वत्रापि प्रचाल्यते। वङ्गदेशे दक्षिणादिवैष्णवेषु आन्ध्रदेशब्राह्मणकुटुम्बेषु व्रतमिदं महादीक्षया निर्वाह्यते। दूरस्थाः कलशे यमुनानदीजलमानीय पूजायां यमुनामाह्वयन्ति।

### अनन्तपूजा -

अनन्तशब्दस्य आदिशेषः विष्णुः, रुद्रः इत्याद्यर्थास्सन्ति। अत्र तु विष्णोः शय्यारूपादिशेषस्यैव पूजा आचर्यते। भूभारवाहकोऽप्यादिशेषः। पद्मपिण्डेन सप्तफणाकारः अथवा दर्भैरपि सर्पचित्रं निर्मीयते। तदुपरि कलशः निक्षिप्यते। पूजायां सहस्रशिराः, फणैः सप्तभिराविष्टः इत्यादिपदानि उच्चरन्ति।

### तोरपूजा

तोरं चतुर्दश ग्रन्थिबद्धं कुङ्कुमयुक्तमवश्यं भवितव्यम्। पूजारम्भात् पूर्वं गतवर्षतोरं पूजानन्तरं दक्षिणहस्तेन धार्यम्। पश्चात् जीर्णपूर्वतोरं परिहरणीयम्। अनन्तपूजायां चर्दुशसंख्यायाः प्रामुख्यं वर्तते। विष्णुशय्याभूतसर्पस्य सप्तफणाः, तिथिरपि चतुर्दशी। तोरं चतुर्दश सूत्रनिर्मितम्। तोरस्यापि चतुर्दशग्रन्थयः। चतुर्दशपत्रिपूजा। नैवेद्यस्यापि चतुर्दशफलानि, चतुर्दश पिण्डियुतपचनम्, वायनदानाय चतुर्दशातिरसोपयोगः आचारः भवति। चतुर्दशवत्सरानन्तरं एकवारं व्रतोद्यापनं कर्तव्यम्।

महाराष्ट्रे गृहस्थेन पत्न्या सह उपवासः, सायंसमये पुरोहितेन अनन्तपूजा अत्र प्रधानानि। गृहे पीठमध्ये पवित्रगङ्गाजलकलशः, कलशे क्षीरबिन्दवः, रजतनाणकम्,

कलशोपरि आच्छादनम्, तदुपरि दर्भतृण निर्मितशेषविग्रहः, शेषनारायणविष्णोः प्रातिनिध्यतया निवेश्याः। चतुर्दशपिण्डिपचनेषु तण्डुलक्षीरशर्करावासनाद्रव्यापूपपायसानि अवश्यं भवितव्यानि। पत्रिपूजायां तुलसीदलान्येव उपयोज्यानि। अनन्तव्रते रात्रौ बन्धुमित्रादयः भोजनाय आहूयन्ते। अनन्ततोरपूजानन्तरं तोरं हस्तप्रथमभागे वर्षपर्यन्तं धार्यम् वर्षानन्तरं नूतनतोरं चतुर्दशीतिर्थौ धार्यम्।

**अनन्तपद्मनाभव्रतकथा पुराणमनुसृत्य -**

वनवासकाले पाण्डवैः पृष्टः श्रीकृष्णः भाद्रपदशुक्लचतुर्दश्यां अनन्तव्रतमाचरणीयमित्युक्त्वा ततः विशिष्य धर्मजेन पृष्टः, पूजोद्दिष्टः अहमेव अनन्तः। सूर्यगमनात् गण्यमान कालकाष्ठामुहूर्तरात्रिन्दिवमासऋतुसंवत्सर युगकल्पस्वरूपः अनन्त पद्मनाभः अहमेवेति समादधौ।

पुरा श्रीकृष्णः व्रताचरणात् प्राप्ताष्टैश्वर्यब्राह्मणकथामेवमुवाच - कृतयुगे वशिष्ठगोत्रीयः सुमन्तो नाम ब्राह्मणः भृगुमहर्षिपुत्रिकां दीक्षानामिकां परिणीय उदारहृदयां सुशीलानामिकां पुत्रिकामवाप। किञ्चित्कालानन्तरं दीक्षामरणानन्तरं वैदिकधर्मलोपभयात् कर्कशानामिकां सार्थकनामधेयां परिणीतवान्। पुत्रिकां सुशीलां अनुरूपवराय कौण्डिन्यमहर्षये पत्नीरूपेण दत्वा यथाविधि तयोः विवाहञ्चकार।

कौण्डिन्यः भाद्रपदशुक्लचतुर्दश्यां स्वग्रामं भार्ययासह गच्छन् मार्गमध्ये नदीतीरे सुमङ्गलिनीभिः आचर्यमानं अनन्तपद्मनाभस्वामिव्रतपूजां ददर्श। तदा सुवासिन्यः सुशीलायै व्रतपूजाफलमेवमूचुः - अनन्तव्रतपूजया अनन्तफलानि लभ्यन्ते। भाद्रपदशुक्लचतुर्दश्यां नदीस्नानानन्तरं आर्द्रवस्त्रधारणं कृत्वा गृहप्राङ्गणं गोमयजलसिक्तं कृत्वा सर्वतोभद्रनामकाष्टदलपद्मं तत्र निक्षेप्यम्।

पद्ममण्टपजलपिरतः रङ्गवल्ली रचनीया। ततः दक्षिणपार्श्वे उदकपूरितकलसमध्ये दर्भैः सप्त फणासहित पद्मनाभस्वामी आवाहनीयः। ततः चतुर्दशग्रन्थियुक्त कुङ्कुमसहितनूतनतोरं स्वामिसमीपे स्थाप्यम्। षोडशोपचारपूजानन्तरं गुडमिश्रिताष्टाविंशत्यतिरसाः नैवेद्यरूपेण समर्पणीयाः। चतुर्दशरसाः वायनरूपेण देयाः। शिष्टाः चतुर्दशरसाः पूजाभागिनीभिरेव आहारः इव स्वीकरणीयाः। वर्षे वर्षे एवं कृत्वा नवतोरं धृत्वा चतुर्दशवर्षानन्तरं (उद्यापनं) कृत्वा पुनः व्रताचरणमारम्भनीयम्।

एतत्सर्वं श्रुत्वा कौण्डिन्यस्य भार्या सुशीलापि यथाशास्त्रं व्रतमाचर्य तोरं धृत्वा स्नानसन्ध्यावन्दनाद्यनन्तरं भर्त्रा सह सक्तुपिण्डिं खादित्वा पुनः रथमारुह्य गच्छन्ती आश्रमं प्राप। ततः अनन्तव्रताचरणमाहात्म्यात् आश्रमे दम्पती अष्टैश्वर्यसम्पन्नौ जातौ तौ सुखेन कालं यापयतः। अनन्तरं कौण्डिन्यः कदाचित् हस्तारम्भधृतसुशीला तोरं दृष्ट्वा तत्फलादेव अस्माकमाश्रमः अष्टैश्वर्यसम्पन्नः जातः इति भार्यावचनं शृत्वापि अविश्वस्तः भार्यया हस्तधृतं तोरं शिथिलीकृत्य अग्नौ पातयामास। सा झटिति अग्रेः मध्यात् तोरं बहिरानीय " अपचारः भर्तुकृतः क्षाम्यः इति" भगवन्तं प्रार्थयित्वा तत्तोरं क्षीरेण आर्दीकृत्य पुनः धृतवती।

अपचारफलात् सुशीलापतिः दारिद्र्यपीडितः कालक्रमेण अरण्ये गच्छन् क्षुद्बाधापीडितः अनन्ताय स्वकृतं दोषं ज्ञात्वा अनन्तपद्मनाभस्वामिनं द्रष्टुमैच्छत्। मार्गमध्ये वृक्षं, वत्सं, वृषभं पुष्करिण्यौ, गार्दभं, हस्तिनं, अनन्तपद्मनाभस्वामी कुत्र वर्तते इति पृष्ट्वा अप्राप्तसमाधानः विषादग्रस्तः दुःखपारवश्येन मूर्च्छाङ्गतः। तदा दयाळुः अनन्तपद्मनाभस्वामी ब्राह्मणरूपेण प्रत्यक्षीभूय तं कौण्डिन्यं स्वगृहं नीतवान्। ततः झटिति अदृष्टः ब्राह्मणः दिव्यासने अनन्तपद्मनाभरूपेण प्रत्यक्षीभूतः। कौण्डिन्यः स एव भगवान् अनन्तः इति ज्ञात्वा तं शतधा तुष्टाव सन्तुष्टः अनन्तः तस्य वरान् ददौ। वरप्रदानसन्दर्भे मार्गदृष्टान् आम्रवृक्षधेनुवृषभपुष्करिणीगार्दभ गजवृद्धब्राह्मणविषयं अधिकृत्य कौण्डिन्येन पृष्टः अनन्तः एवं समादधौ।

१. विद्यावानपि पूर्वजन्मनि विद्यादानाभावात् आम्रवृक्षः जातः, २. पूर्वजन्मनि भाग्यवानपि अन्नादाभावात् तृणभक्षणधेनुः जातः ३. पूर्वजन्मनि निस्सारभूदानात् राजा वृषभः जातः। ४. द्वे पुष्करिण्यौ जन्मान्तरे परदूषात् एका गार्दभः अन्या धर्मातिक्रमणात् गजः, इव जातौ इति।

एवं विवरणानन्तरं त्वया दृष्टः वृद्धब्राह्मणः अहमेवेति अनन्त पद्मनाभस्वामी प्रोवाच। एतत्सर्वं श्रुत्वा पश्चात्तप्तः कौण्डिन्यः भगवन्तं पुनः तुष्टाव। ततः प्रक्षालितानन्ताक्षेपदोषः अमितभक्त्या गृहं गत्वा सुशीलया भार्यया सह चतुर्दशवर्षपर्यन्तं अनन्तव्रतमाचचार। तत्फलात् पुत्रपौत्रसम्पत्सहितः अनन्ततोजोरूपनक्षत्रमण्डले नक्षत्ररूपं प्राप्तः। एवं अनन्तव्रतेन यः कोऽपि नष्टसर्वसम्पदः पुनः प्राप्य अष्टैश्वर्य सम्पन्नः भवेदिति श्रीकृष्णः युधिष्ठिराय व्रतफलमुपदिदेश।

# वराहावतारः

- श्री विजया भट्
चरवाणी - ९१०३९६०८९३

एकदा ब्रह्मणः मानसपुत्राः सनकादिमुनयः वैकुण्ठलोकं द्रष्टुम् अगच्छन्। तत्र जयविजयनामकौ द्वारपालकौ हरिं दिदृक्षून् तान् द्वारि एव अवरुद्धवन्तौ। तस्मात् कुपिताः मुनयः "युवां दैत्यगतिं प्राप्नुतम्" इति शापम् अददुः। स्वदोषं ज्ञात्वा तावता तौ द्वौ "परं हरिस्मृतिः तु सदा भवतु" इति अभियाचितवन्तौ।

तावता श्रीहरिः ताक्ष्यारूढः सन् बहिरागत्य भृत्योः दोषम् विज्ञाय "युवां भूमौ जन्मत्रयेपि क्रोधग्रस्तौ मम प्रतिरोधिनौ असुरौ भूत्वा मामेव उपेतम्" इति अवोचत्।

अतिक्रान्तेष्वहस्सु तौ भृत्यौ दितिकश्यपयोः पुत्रौ भूत्वा जन्म प्राप्तवन्तौ। हिरण्याक्षहिरण्यकशिपुनामकौ द्वौ रुषान्धौ यमलौ हरिं द्विषन्तौ आस्ताम्। अथैकदा हिरण्याक्षः युद्धाय वैरिम् अनवाप्य क्रुद्धः सन् वसुधामेव जले न्यमज्जयत्। रोषान्धं तं दृष्ट्वा "युधि हरिरेव तव समानः" इति वरुणेन उक्ते हिरण्याक्षः तस्य मार्गणं कुर्वन् अगच्छत्।

तावति काले भूमिः जले निमग्ना इति ज्ञात्वा सृष्टिकार्ये निरतः स्वायम्भुवः मनुः मुनिजनैः समं ब्रह्माणं द्रष्टुम् अयात्। "हे त्रिधामन्! मयि प्रजाः सृजति सति अवनिः निमग्ना" इति मनुना ब्रह्मः श्रावितः। झटिति ब्रह्मदेवः हरिमभ्युपेत्य अवोचत् - "विभो! यदा पूर्वम् अवनी जले ब्रुडिता तदा मया जलं पीतम्। परम् अधुना किं वा करोमि?" इति। तावता ब्रह्मणः नासारन्ध्रात् शिशुकोलरूपी कश्चित् बहिरागतः। सर्वेषु पश्यत्सु तस्य गात्रम् अवर्धत। "को वा एषः इति ब्रह्मणा चिन्त्यमाने शैलसदृशः भूत्वा सः घोरं गर्जयन् तरसा जले अवाङ्मुखः सन् अवतरितवान्। तदनु अक्षिणी परिघूर्णयन् भीकरं रवं कुर्वन् रसातलस्थान् सर्वान् अकम्पयन् झटिति अवनीम् अन्विष्य दंष्ट्राङ्कुरेण समुद्वहन् बहिरागन्तुम् उद्युक्तः सः किटिः।

अहो! तदानीं पटुः नारदमुनिः हरिं मार्गयन्तं हिरण्याक्षम् उपगम्य तं शंसन् हरिं निन्दन् मन्दम् अवोचत् - "सः मायावी हरिः भवतः वसुमतीम् अपहृतवान् किल?" इति तावता हिरण्याक्षः "क्वासौ? क्वासौ? सः हरिः कुत्र गतवान्?" इति वदन् सर्वत्र दृष्टिं प्रासारयत्। तदा मुनिः दंष्ट्राग्रेण महीं वहन् उदकात् उद्गच्छन्तं हरिम् अदर्शयत्।

तदा हिरण्याक्षः शिरः परिवृत्य "एषः मृगः" इति हसन् बहुतरैः वचनैः तं निन्दन् युद्धाय सिद्धः जातः। हरिरपि झटिति वसुन्धारां संस्थाप्य युद्धाय सिद्धताम् अकरोत्।

प्रथमं दैत्यः गदां स्वीकृत्य असङ्ग्रामयत्। देवेषु पश्यत्सु ब्रह्मणा उक्तम् - "सन्ध्यातः पूर्वम् एनं मृद्नातु" इति। गदायुद्धे हरेः गदा भूमौ अपतत्। क्षिप्रं हरिः महाचक्रम् आधत्त। तेन असुरः रोषोन्मत्तः इव बभूव। अपि च सहसा स्वस्य शूलं विसृजति स्म। यदा शूलः चक्रप्रहरणात् भग्नः अभवत् रोषारुक्षः सन् मुष्ट्या ताडयन् मायां प्रवितत्य युद्धवान् असुरः। सर्वैः मुनिजनैः हरौ स्तूयमाने हरेः चक्रस्य अभिमुखं हिरण्याक्षः पराजयं प्राप्तवान्।





# श्रीनिवास साक्ष्यम्

तेलुगुमूलम् - डा.मन्नन गङ्गाधर प्रसादः
चित्राणि - श्री के. द्वारकानठाथः
संस्कृतानुवादः - डा.सूर्यनारायणरेड्डि
चरवाणी - ८१०६५७८२५०

कस्मिंश्चित् ग्रामे रामय्य, नागभूषणमिति मित्रे आस्ताम्। रामय्यः धनावश्यकतया नागभूषणात् ऋणवाग्दानपत्रं विलिख्य सहस्ररूप्यकानि स्वीचकार।



किञ्चित्कालानन्तरं स्वीकृतं ऋणधनं नागभूषणाय प्रत्यर्पयामास।ऋणपत्रं प्रत्यर्पय इति पृष्टोऽपि असत्यकारणानि वदति स्म गतेषु दिनेषु।




एवं बहुवारं पृष्टोपि नागभूषणम् काकम्बाकथाः अकथयत्।

वर्षानन्तरं एकस्मिन् दिने न्यायस्थानसेवकः आगत्य निन्दारोपण पत्रं (Notice) ददौ।








रामय्यः, एवं कतिदिनपर्यन्तं कालयापनं करिष्यति? नागभूषणम्। न्याय स्थाने एव विवादनिर्णयं पश्यामीति चिन्तयामास।

तदा न्यायमूर्तिः त्वया ऋणधनप्रत्यर्पणसमये यः कोऽपि साक्षी आसीद्वेति पप्रच्छ।

न्यायस्थाने न्यायाधिकारी, त्वदर्थं न्यायवादी यः कोऽपि अस्ति वा इति अपृच्छत्।रामय्य तदा अहमेव वादनं करिष्यामीति अवोचत्।

न्यायमूर्ति मुद्दिश्य नागभूषणम्

आर्य! अयं रामय्य मत्तः ऋणं स्वीकृत्य अद्यापि न ददाति न्यायं कुर्वन्तु।

महा प्रभो! बहुकालात्पूर्वमेव ऋणधनं प्रत्यर्पितम्

परन्तु एकवर्षात् प्रभृति ऋणवाग्दान पत्रं न प्रत्यर्पयति पुनः मय्येव विवादपत्रं (Notice) न्यायलये समर्पयामास।

तदा न्यायमूर्तिः रामय्यमुद्दिश्य तव ऋण प्रत्यर्पणसमये साक्ष्यम्स्तिवा इत्यपृच्छत्।

दिग्भ्रान्तः रामय्या न्यायमूर्तिं उद्दिश्य

सप्तगिरिशे भक्तिश्रद्धाभ्यां सहितः श्रीनिवास एव मम साक्ष्यम् धनं बहुकाला त्पूर्वमेव दत्तम्। मां विश्वसन्तु। अयं वञ्चनां करोति इति त्वमेव दिगिति नमश्चस्कार

ऋणवाग्दानपत्रं सम्यक् परिशील्य न्यायमूर्तिः एवं समादधौ।

ऋणपत्रे पर्याप्त स्टाम्पूस् (Revenue Stamps)न सन्ति। विवादः निरर्थकः इति न्यायनिर्णयं अवदत्।



नीतिः - तिरुमलवेङ्कटेश्वरस्वामी स्वभक्तान् स्वयमेव रक्षतीत्यस्य इदमेकं साक्ष्यम्।

## बालविनोदिनी

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

१. गणेशचतुर्थी
२. वामनजयन्ति
३.बलरामजयन्ति

उचित समाधान सङ्ख्या कोशे लिखन्तु।

मेलनं वा निष्कासनं कृत्वा ९ सङ्ख्या यत्र आगच्छति तस्मिन् मार्गे गच्छति चेत् छात्र, गुरु समीपं गन्तुं शक्नोति।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 5 +4 | 11 −2 | 10 −1 | 8 −2 | 13 +5 | 13 −6 | 12 +5 | 28 −3 |
| 10 −5 | 6 +3 | 19 −10 | 12 −15 | 14 +3 | 22 −10 | 48 −11 | 19 −2 |
| 5 +4 | 15 −6 | 18 −9 | 17 −8 | 25 −16 | 36 −27 | 1 +6 | 39 −2 |
| 7 +2 | 27 −18 | 8 +1 | 13 −4 | 13 −6 | 25 −16 | 49 −40 | 0 +9 |

सम्यक् चित्रं योजयत



Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



18-07-2024 तिथौ तिरुमलश्रीवेङ्कटेश्वरालये निर्वाहिताणिवरास्थाने
तिरुमल पेद्दजिय्यर् स्वामी जी, चिन्नजिय्यर् स्वामीजी
ति.ति.देवस्थान कार्यनिर्वहणाधिकारिणः
जे.श्यमालाराव् महोदयाः ऐ.ए.एस्., भागं गृहीतवन्तः



27-07-2024 तिथौ
अप्पलायगुण्टप्रसन्नवेङ्कटेश्वरस्वामिने
निर्वाहितं पुष्पयागमहोत्सव दृश्यम्।



कार्यनिर्वहणाधिकारि
जे.श्यमालाराव् महोदयैः ऐ.ए.एस्.,
29-07-2024 तिथौ आडिकृत्तिक सन्दर्भे तिरुत्तणि
सुब्रह्मण्यस्वामिने ति.ति.दे. पक्षतया
धर्मपत्न्या सह कौशेयवस्त्र समर्पण दृश्यम्।



23-07-2024 तिथौ तिरुमलकल्याणकट्टे भक्तानुद्दिश्य भाषमानाः ति.ति.दे.
कार्यनिर्वहणाधिकारिणः श्री जे.श्यामला राव् महोदयाः, एभिस्साकं
संयुक्तकार्यनिर्वहणाधिकारिणी (विद्या&आरोग्यं) श्रीमती गौतमी ऐ.ए.एस्., महोदया अपि च
प्रधान प्रजासबन्धाधिकारी डा॥रविः, अन्याधिकारिणश्च। तत्सम्बन्धि मनोहर दृश्यमिदम्।



27-07-2024 तिथौ तिरुमल वेङ्कटेश्वरालये ति.ति.
देवस्थानानुबन्धकार्यदर्शित्वेन, पत्न्यासह आगत्य बाध्यतां
स्वीकुवुद्भ्यः श्री सि. हेच्.वेङ्कय्य चौदरि, ऐ.ए.एस्., महोदयेभ्यः
श्रीनिवास प्रसाद समर्पण दृश्यम्।



27-07-2024 तिथौ तिरुमलश्रीवारि आलये श्री यस्.श्रीधर् ऐ.ए.एस्.,
महोदयैः पर्यवेक्षकत्वेन भद्रताधिकारित्वेन च उद्योगबाध्यताः
स्वीकृत्य सकुटुम्बं
श्रीवेङ्कटेश्वर स्वामिनः दर्शनदृश्यम्।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY
TIRUMALA TIRUPATI DEVASTHANAMS PRINTING ON 25-08-2024 & posting at Tirupati
RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal
Regd. No. TRP/154/2024-2026" LICENCED TO POST WITHOUT PREPAYMENT
No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

श्रीगोविन्दराजस्वामिनां पवित्रोत्सवाः, तिरुपति
14.09.2024 आरभ्य 16.09.2024 पर्यन्तम्